**स्वरादौ ताद्धिते प्राप्ते गोर्यदेव विधीयते ॥१५१॥**

स्त्रियां भवः 'स्त्रैणः'। 'स्त्रैणेन नीता विकृतिं लघिम्ना' इति भट्टिः। पुंसि भवः "पौंस्नः"। स्त्रियाः पुंसश्च भावेऽर्थे तु नञ्-स्नञौ विकल्पेन स्याताम्, तेन स्त्रियो भावः 'स्त्रैणं, स्त्रीत्वञ्च'। गोपदात्तु यद्यदर्थे स्वरादितद्धितं प्रसक्तं तत्तदर्थे तदेव साकाङ्क्षम्, तेन गोरपत्यं, गौर्देवता यस्य, गवा चरति, गोः समूह इत्याद्यर्थे 'गव्यमि'त्येव प्रयोगः। गोत्वं गोवदित्यादौ तु त्वादिको न स्वरादिः। तत्र भवः॥ १५१ ॥

**ये भवार्थे यतः प्रोक्तास्ताद्धितप्रत्ययाः पुरा।**
**जातेऽर्थेऽपि ततस्ते स्युर्विशेषविधिना विना ॥ १५२ ॥**

मथुरायां भव इत्यर्थे इव मथुरायां जात इत्यर्थेऽप्यणोऽतिदेशः। एवं 'स्त्रैणः पौंस्नः, ग्राम्यः, ग्रामीणः' इत्यादौ। गणादेरपि प्रावृष एण्यः प्राभाविकः, प्रदोषादेरिकण्णादिप्राप्तौ च कादिर्विशेषविधेर्वक्ष्यते ॥१५२॥

**(१)प्रावृषस्तत्र जातेऽर्थे स्यादिकः शरदस्त्विकञ्।**
**संज्ञायां विहितः पूर्वाह्णापराह्णादितस्तु कः ॥ १५३ ॥**

प्रावृषि जातमित्यर्थे 'प्रावृषिकं पत्रं, प्रावृषिका वृष्टिः'। शरदि जातमित्यर्थे तु संज्ञायमिकञ्, यथा शारदिकाः मुद्गप्रभेदाः, शारदमन्नम्'। पूर्वाह्णे जातमित्यर्थे तु पूर्वाह्णादिभ्यः कः, यथा 'पूर्वाह्णिकं, अपराह्णकं, मध्याह्नकमि'त्यादि। एवमार्द्रायां मूलायां जातमित्यर्थे 'आर्द्रकं, मूलकं' 'के सममस्ये'ति ह्रस्वः ॥ १५३ ॥

**(२)अण्णकः स्यादमावास्याशब्दात्तद्धिकृतादपि।**
**स्थानान्तादथ गोशालखरशालाच्च नित्यशः ॥१५४॥**
**जातार्थकस्य लुग्वा तु वत्सशालादितो भवेत्।**

---

(१) 'प्रावृषष्ठप्' (४।३।२६) 'सञ्ज्ञायां शरदो वुञ्' (४।३।२७) 'पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्' ४।३।२८ इति पा०सूत्रोदाहरणान्याह प्रावृषीति।

(२) 'अमावास्याया वा' [४।३।३०] 'अच' (४।३।३१] 'स्थानान्तगोशालखरशालाच्च' (४।३।३५) वत्सशालाभिजिदश्वयुक्शतभिषजो वा' [४।३।३६] इति पा०सूत्रोदाहरणानां लक्ष्य निर्दिशति अण्णक इति।

अमावास्यायां जात इत्यर्थेऽण् अकश्च स्यात्, यथा 'आमावास्यः, अमावास्यको बालकः' । तद्विकृतादमावास्याशब्दादपि, यथा च 'आमावास्यः, अमावास्याकः' । स्थानान्ताद्विहितस्य जातार्थकतद्धितस्य नित्यं लुक् स्यात्, यथा गोस्थानं जातमित्यर्थे 'गोस्थानं पत्रम्' । एव'मश्वस्थानं शशस्थानमि'त्यादौ । गोशालायां जातमित्यर्थे 'गोशालं, खरशालम्' इत्यत्राप्येवम् । नित्यममीषां क्लीबत्वम्, एभ्यो जातार्थस्य नित्यं लुग्विधानात् । अश्विन्यादितो जातार्थकस्य वा लुगिति प्रतीयते, अत एव "मघातोऽणो न लुग्भवेत् इत्यग्रे निषेधः सङ्गच्छते" इति निबन्धकारः । वत्सशालादितस्तु जातार्थस्य वा लुक्, यथा वत्सशालायां जात इत्यर्थे 'वत्सशालो, वातशालश्च वृक्षः'। एव'मभिजित् आभिजितो वा बालकः' ।

वत्सशालाभिजिच्चित्रा रेवती रोहिणी तथा ।
अश्वयुङ्मृगशीर्षश्च वत्सशालादिको गणः ॥

मृगशिरसि भवं जातम् इत्यर्थे तु न तद्धितमनभिधानात् ॥१५४॥

**अनुराधा तिष्यपुष्यौ हस्त-स्वाती पुनर्वसू ॥ १५५ ॥**
**विशाखाबहुलैतेभ्यो नित्यं जातार्थकस्य लुक् ।**
**श्रविष्ठाषाढयोरेयण् उण् वा शतभिषक्पदात् ॥ १५६ ॥**

(१)अनुराधायां जातो 'अनुराधः' स्त्रीप्रत्ययस्य लुक् तद्धितलुकीति लुक्। एवं 'तिष्यः, पुष्यः, हस्तः, स्वातिः, पुनर्वसुः, विशाखो, बहुलः' । कथं बाहुलेयस्तारकजिदिति ? बहुलो कृत्तिका तत्र जात इति संज्ञायामेयण् ॥ १५६ ॥

इति महामहोपाध्यायश्रीजगदीश-तर्कालङ्कार-भट्टाचार्य्यकृतौ
शब्दशक्तिप्रकाशिकायां ।
तद्धितप्रकरणं समाप्तम् ।
समाप्तश्चायं ग्रन्थः ।
शिवम्

---

(१) 'श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्' [४।३।३४] इति पा० सूत्रोदाहरणान्याह अनुराधायामिति ।